श्रीः

# व्युत्पत्तिवादतरणिः


वाराणसेय-श्रीरानीचन्द्रावतीश्यामामहाविद्यालय
श्रीमदुदासीनसंस्कृतविद्यालयप्रधानाध्यापकेन
पं० श्रीमदुग्रानन्द झा शर्म्मणा
सङ्कलिता ।

तदीयशिष्येण न्यायव्याकरणाचार्येण
पण्डित श्रीनरेन्द्र झा शर्म्मणा
संशोधिता ।



प्रकाशकः
श्रीमास्टर खेलाड़ीलाल ऐण्ड सन्स
कचौड़ीगली, बनारस सिटी





२००४ सम्वत् सम्वत्सरे फा० कृ० शिवरात्री ।

प्रथम संस्करणे १००० ] १९४८ ई० [ मूल्यम् चतुर्दशाणकाः

# प्राक्कथनम्

को न प्रेक्षावानुत्प्रेक्षितुमीशीत तत्रभवद्गदाधरभट्टाचार्यकमनीयानल्पकल्पनोद्वेलद्वीचिनिचयोन्मज्जदतिदुरूहार्थमकरनिकराकीर्णस्य, फूत्कुर्वद्भिरिव फक्किकाफणास्फारीभवद्भिः सन्दिग्धसन्दर्भसरीसृपसन्दोहैरतिभीषणस्य, विविधविषमव्याख्यावात्या व्याधूयमानस्य चतुष्षष्टिवादैरतिगभीरस्य व्युत्पत्तिवादस्य महार्णवरूपताम् ।

तस्य च विलसन्तीनामपि विविधव्याख्यानामपरिणतमतिभिरतिदुरवगाहतया स्वगुरुकर्णधारैः स्वस्वाध्यापनप्रयैरुद्वेलिता अपि धारणाविलयेन कतिपयपदान्यपि ज्ञातुमपारयन्तोऽद्यतना अन्तेवासिजना आचार्यपरीक्षोपरितननिश्रेणिकान्तिमखण्डखण्डितोत्साहाः सन्ततमाक्रोशन्तः प्रश्नोत्तरमुद्रया दर्शितव्युत्पत्तिसरणिकाञ्चनतरणिम्प्रणेतुं कस्यचन कारुणिकस्य लेखनीस्फुरणमपेक्षमाणा एवाद्ययावदासन् ।

परमसत्त्वे भगवता श्री विश्वनाथेनान्दोलितहृदयः परमसहृदयः कुसुमाकर इव न्यायकुसुमसम्पदः, काश्मीर केदार इव व्याकरणकुङ्कुमस्य, कान्त इव कल्पनाकल्लोलिनीनाम् मौलिमणिरिव मैथिलानाम वाराणसेयश्रीश्यामामहाविद्यालयोदासीनविद्यालययोः प्रधानाध्यापयिता झोपनामा श्रीमानुमानन्दशर्म्मा स्वजनन्याः स्मृति समीहया कलावतीतितदाख्यया व्युत्पत्तिवादतरणिमिमामस्माकमाग्रहेण कौतुकेन च प्रश्नोत्तरक्रमेण प्राणैषीदिति प्रवृत्तिरियं कस्यन व्युत्पत्तिप्रणयिनः प्रेयसी स्यात् ।

किन्त्वसौ कृती कृतिमिमां व्युत्पत्तिवादतरणिपदेनोद्घोषयँस्तदन्तरवगाहनसुखेनैव समीहितसिद्धिमायुष्मतामभिसन्धत्ते न जातु व्यसनेनैव पङ्क्तितीनामेवाभ्यसनेन, किमधिकेन, ।

अग्रेऽपि

अनयोत्तीर्य्यतरण्याऽगाधंव्युत्पत्तिवादपाथोधिम् ।
व्युत्पत्त्या निर्बाधं सर्वे भूयासुराचार्य्याः ॥१॥
इति

सं० २००४ फा० शु० प्रतिपदि गुरौ

झोपाह्वः श्रीभूपनारायण शर्म्मा,
काशिकराजकीय संस्कृतमहाविद्यालयाध्यापकः

---

यतिवृन्दवन्दितपदद्वन्द्वारविन्दस्य सर्वतन्त्र स्वतन्त्र वेददर्शनाचार्य्य महामण्डलेश्वर स्वामि श्री गङ्गेश्वरानन्दजी महाराजस्य शयकुशेशययोः सादरं समर्पयति ॥

जयतितरामनुकार्य्यः कृतिभिरसौ वेददर्शनाचार्य्यः ।
सच्चिदमन्दानन्दः स्वामीगङ्गेश्वरानन्दः ॥ १ ॥
पण्डितजगदाखण्डल ? भूर्वैवाखण्डमण्डलाधीशः
शास्तिभवानाध्यात्मिकडिण्डिमनादैरिमंलोकम् ॥ २ ॥
साम्राज्येभवतश्चिरन्तनतरोदासीन विद्यालयो ।
न्यायाद्याखिलदर्शनेषु भजते काश्यामतीवोन्नतिम् ॥
तस्मिन्नेष तु शेषजीवनमपि स्वस्योप युङ्क्तेऽधुना
स्मारं स्मारमनुक्षणं गुणगणंभावत्कमध्यापयन् ॥ ३ ॥
यद्यपि नाविष्कुरुते कौशलमीदृक्कृतिः कृतिनः ।
भृशमुपकुरुते छात्रान् किन्त्वतिमात्राकुलानभितः ॥ ४ ॥
गङ्गेश्वर ? त्वगङ्गेदानीन्ते मत्कृतिं पूत्वा
दृष्टादृष्टार्थाभ्यां सपदि पिपूर्य्यादियंश्रद्धा ॥ ५ ॥
तस्मादेतत्पदयुग्म नमतिभक्त्या प्रभो ? पुरस्कुर्वन्
निजकृति "मुग्रानन्दः" सानन्दन्ते समर्पयते ॥ ६ ॥

वशम्वदः
श्रीयुत उग्रानन्दः



ओं नमः साम्बशिवाय,

# व्युत्पत्तिवादतरणिः

यो मन्दरो निखिलदर्शनमन्थनेन
साहित्यसुन्दरगिरा च सुबन्धुरेव ।
श्रीबालकृष्णमपरं मवरं गुरूणां
मूर्त्तञ्च धर्ममिवतं सततं प्रणौमि ॥ १ ॥
श्रीमानुमापतिरिति प्रथितो विदेहे-
ष्वाद्योरमेश्वरमहानृपपूर्णकामः ।
दुर्गापदार्चनरतो जनकोऽतियोग्य-
स्तं मातरञ्च सततं हृदि भावयामि ॥ २ ॥
उग्रानन्देन विदुषा मैथिलेन कलावती
व्युत्पत्तिवादतरणिरतन्यते छात्रहेतवे ॥ ३ ॥

प्र०—शाब्दबोधेनैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्य्यादया भासत इति, अत्रैकत्वस्यापरत्वस्य च कुत्रान्वयः, संसर्गमर्य्यादयेत्यस्य वा कोऽर्थः ।

उ०—ननु शाब्दबोधे चैकपदार्थ इत्यत्रैकत्वस्य पदे पदार्थे पदार्थताव-च्छेदके वाऽन्वयः ? तत्र नाद्यः, तथासति स्वार्थानुयोगिकत्व-स्वभिन्नं यत्पदन्तदर्थप्रतियोगिकत्वोभयसम्बन्धेन पदविशिष्टः

संसर्ग आकाँक्षाभास्य इति पर्य्यवसितार्थे नीलघटयोरभेदस्य
काँक्षाभास्यत्वेऽपि पचतीत्यादौ-आख्यातार्थयोः कृतिवर्त्तमा
कालयोर्वृत्तित्वसंसर्गस्यासङ्ग्रहात् न द्वितीयः,—तथासतिस्वा
योगिकत्व स्वभिन्नपदार्थप्रतियोगिकत्वोभयसम्बन्धेन पदार्थ वि
शिष्टः संसर्ग आकाँक्षाभास्य इति पर्य्यवसितार्थस्य पचतीत्या
कृतिवर्त्तमानकालयोर्वृत्तित्वसंसर्गे सत्त्वेऽपि नीलघटयोरैक्ये
तयोरभेदस्यासङ्ग्रहप्रसङ्गात्, नापि तृतीयः—तथा सति स्वाव
च्छिन्नानुयोगिकत्व स्वभिन्नपदार्थतावच्छेदकावच्छिन्नप्रतियोगि
कत्वोभय सम्बन्धेन पदार्थतावच्छेदक विशिष्टः संसर्गआकाँक्षाभास्य
इति पर्य्यवसितार्थस्य नीलत्व घटत्वयोर्भेदेन नीलघटयोरभेदसंग्रहे
ऽपि संयोगेनाभावोनास्तीत्यादौ–अभावपदेनाभावत्वस्य स्वरूपत
उपस्थितत्वात्तदीय स्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्यासङ्
ग्रहप्रसङ्गादिति चेन्नैवम्—उपस्थितीयविशेष्यताविशिष्टा संसर्गता
आकाँक्षा प्रयोज्या इत्यत्र शाब्दबोधेचं कपदार्थ इत्यस्य तात्पर्य्यम्
वै० स्वप्रयोज्यविशेष्यतानिरूपितत्व, स्वप्रयोजक वृत्तिज्ञानीय-
विषयतानिरूपितवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीय विषयता
प्रयोज्यप्रकारतानिरूपितत्वोभय सम्बन्धेन, अतएव समवायस्यै-
कत्वेऽपि तन्निष्ठयोरेकत्वनिष्ठप्रकारतानिरूपित घटत्वनिष्ठप्रका-
रतानिरूपितयोः संसर्गतयोर्भेदेन आकाँक्षाप्रयोज्यत्वाप्रयोज्यत्वे
सूपपन्ने ।

वस्तुतस्तु संसर्गताविशिष्ट संसर्गतेत्यादिपर्य्यवसितार्थः । वै०
स्वतादात्म्य, स्वनिरूपितप्रकारताविशिष्टविशेष्यताकत्वाभ्याम् अत्र
वैशिष्ट्यम् स्वप्रयोजकपदनिष्ठाकाँक्षाज्ञानीयविषयतानिरूपितसां-
सर्गिकविषयतानिरूपितपदनिष्ठविषयताप्रयोज्यत्व—स्वप्रयोजकवृ-
त्तिज्ञानीयविषयता निरूपित विषयत्वाप्रयोज्यत्वान्यतरसम्बन्धे-
नेति दिक् ॥

संसर्गमर्य्यादाशब्द आकाँक्षायां रूढः, तृतीयार्थः प्रयोज्यत्वम् तस्य भासधात्वर्थविषयतायामन्वयः संसर्गभानं मर्य्यादया यस्या इति व्युत्पत्त्या संसर्गमर्य्यादाशब्द आकाँक्षायां योगरूढ इत्यपि केचित् ।

प्र०—शाब्दबोधेचैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्य्यादया भासत इत्येतद्वाक्यजन्यशाब्दबोधप्रकारः सम्यङ्निरूप्यताम् ।

उ०—शाब्दबोधे चेत्यस्य—एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकः शाब्दबोधाय विषयताश्रयः संसर्ग आकाँक्षाप्रयोज्य विषयताश्रय इति शाब्दबोधः, संसर्ग शाब्दबोधीयविषयताश्रयत्व विशेषणानुमित्यादि ससर्ग व्यभिचारः ।

प्र०—साञ्जात्यञ्च विभक्तिविभाजकप्रथमात्वादिनेतिगदाधरः, अत्र विभक्तिविभाजकत्वस्य कः परिष्कारः, समानानु पूर्वीकत्वञ्च किम् । अत्र सुन्दराभ्यां घटाभ्यामित्यादौ—एकविभक्तौचतुर्थीत्वग्रहे परत्र च तृतीयात्वग्रहे विभक्त्योः समानानुपूर्वीकत्वग्रहसम्भवेन—अभेदान्वय बोधापत्तिः कुतो नोक्ता ?

उ०—सुब्विभाजकत्वञ्च सुप्त्वविशिष्टत्वम् वैं० च० स्वविशिष्टत्व स्व विशिष्टाव्याप्यत्व स्वव्याप्याघटितत्वैः, आद्ये वैं० स्वव्याप्यत्व स्वभिन्नत्वाभ्याम् द्वितीये वैं० स्वव्याप्यत्व स्वविशिष्टविशिष्ट भिन्नत्वाभ्याम् आन्त्यद्य वैं० स्वव्याप्यत्व स्वव्याप्याघटितत्वाभ्याम् द्वि० वैं० स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्याभ्याम् ॥ प्रथमसम्बन्धघटकस्यप्रथमसम्बन्धस्यानुपादने घटत्वेऽतिप्राप्तिः द्वितीयस्यानुपादाने सुप्त्वेऽतिव्याप्तिः द्वितीयसम्बन्धानिवेशेसुत्वादावतिव्याप्तिः द्वितीयसम्बन्धघटकस्यद्वितीयसम्बन्धस्यानुपादानेसुप्त्व व्याप्य यदाप्वंतद्व्याप्यत्वेनतृतीयात्वादावव्याप्तिः द्वितीयसम्बन्ध-

घटकद्वयद्वितीयवैशिष्ट्यंतत्रप्रथमवैशिष्ट्य घटकद्वितीयसम्बन्धानुपादाने सुप्त्वव्याप्यंयत् सु औ एतदन्यतरत्वादिकं तद्विशिष्टत्वेन प्रथमात्वादावव्याप्तिः [स्वव्याप्याघटितत्वनिवेशेतु सुप्त्वव्याप्येन-सुत्वेनघटितत्वात्ततादृशान्यतरत्वमादायाव्याप्तिः वै० घटकतृतीय सम्बन्धानिवेशे सु-अम्एतदन्यतरत्वेऽतिव्याप्तिः सुप्त्वव्याप्यत्वसुप्त्वव्याप्याव्याप्यत्वयोःसत्वात् तन्निवेशेतु सुप्त्वव्याप्यसुत्वघटितत्वान्नदोषः वस्तुतः प्रथमात्वद्वितीयात्वतृतीयात्वचतुर्थीत्वपञ्चमीत्व षष्ठीत्व सप्तमीत्वैतावदन्यतमत्वं सुब्विभाजकत्वमिति न कुत्रापि दोपलेशोऽपीतिशम् ।

"समानानुपूर्वीकत्वञ्च स्वविशिष्टत्वम् वै० च० स्वघटकावृत्तिश्रावियताव्च्छेदकधर्मावच्छिन्नाघटितत्वस्ववृत्तित्वोभयसम्बन्धेन वृत्तिता च स्वघटकावृत्तिश्रावणप्रत्यक्ष विषयतावच्छेदकधर्मावच्छिन्नाघटितत्वसम्बन्धावच्छिन्ना, घटशब्देनीलघटसमुदायसमानानुपूर्वीकत्वत्वारणायद्वितीयः सम्बन्धः, नीलघटशब्दे घटशब्दसमानानुपूर्वीकत्ववारणाय प्रथमः"

तृतीयान्तसुन्दराभ्यांसमभिव्याहृतचतुर्थ्यन्तघटाभ्यामित्यतोऽपिशाब्दबोधापत्तिः समानानुपूर्वीकत्वसत्त्वादित्यपि दोष इष्यतएव मूलस्योपलक्षणत्वात् सिद्धान्तेतु प्रथमात्वादिना साजात्यविरहान्न दोपः इति

प्र०—विभक्तिविभाजकधर्मेणैव साजात्येवक्तव्ये विभक्ति विभाजक-प्रथमात्वादिना विशेषधर्मेण साजात्यवर्णनं किमर्थम् ?

उ०—"प्रथमात्वादिपदोपादानादेव सुप्त्वेन विभाज्यता लाभः, नच-सुब्विभाजक धर्मेणेत्येव कुतोनोक्तमितिशङ्क्यम् कोऽसौ सुब्विभाजकोधर्मइत्याकाँक्षानिवृत्तये प्रथमात्वादिनेत्यस्यवक्तव्यत्वे विशेषाभावात् ।"

प्र०—यत्रविशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यं विषयसंख्या विरुद्ध-संख्याया अविवक्षितत्वन्तत्रैव विशेष्यविशेषणवाचकपदयोः सामानवचनकत्वनियम इत्यत्र विभक्त्यर्थसंख्येत्युक्त्यैव सामञ्जस्ये विभक्तितात्पर्य्यविषयत्वपर्य्यन्तानुधावनस्य किं प्रयोजनम् किन्तावदत्र विरुद्धत्वम्, विशेषणवाचकप-दोत्तरेति लघूक्तिः कथं परित्यक्ता, उर्वश्यप्सरसोग-च्छतीत्यत्र तादृशविरुद्धसंख्याया अविवक्षितत्वेऽपि कथन्न समानवचनत्वम्, यत्र विशेष्यवाचकपदोत्तर विभक्तिः संख्यातात्पर्येण नोच्चारिता तादृशस्थले तादृशसंख्यायाः प्रसिद्धिःकथम् । समानवचनत्वञ्च परिष्करणीयम् ।

उ०—विभक्त्यर्थत्वेन संख्यायाः प्रवेशे वेदाः प्रमाणमित्यादौयत्र जसि सुत्वभ्रमादेकत्वशक्तत्वभ्रमाद्वा एकत्वशाब्दबोधः तत्रैकत्वस्य विभक्त्यर्थतयासमानवचनत्वापत्तिः । विभक्तिशक्यत्वरूप विभक्त्यर्थत्व प्रवेशे च लाघवविरहः ।

"विरुद्धत्वं तादृश संख्याऽसमानाधिकरणत्वम्, तात्पर्य्यं विषयतावच्छेदकसंख्यात्वव्याप्य धर्मावच्छिन्नभिन्नत्वम्वा" विरुद्धान्तमनिवेश्य विशेषणवाचकपदोत्तर विभक्त्या संख्याया अविवक्षितत्वं यत्र तत्रेत्यादिनिवेशे वेदत्वे एकत्वविवक्षया प्रयुक्तेवेदः प्रमाणमिति वाक्ये समानवचनत्वानुपपत्तिः ननु यत्र विशेष्यवाचकेत्यादिग्रन्थेन तादृशाविवक्षितत्वे समानवचनत्व व्याप्यत्वमेव लभ्यते न तु व्यापकत्वमतोन दोष इति चेन्मैवम समानवचनत्व-व्यापकतानियमस्य पृथगभिधाने ग्रन्थगौरवं स्यादतस्तादृशाविवक्षितत्वेएव समानवचनत्वव्याप्यत्वम् व्यापकत्वं च मन्तव्यम्

एवञ्च व्याप्यत्वपक्षे विरुद्धान्तस्योपरञ्जकत्वेऽपि व्यापकत्वपक्षे उक्तस्थले व्यावृत्तिःस्त्येवेति दिक् ।

दाराप्सर इत्यादिपदोत्तर विभक्त्या संख्याया अविवक्षितत्वेन विशेष्यवाचक पदोत्तर विभक्तितात्पर्य्यं संख्येत्याद्यविवक्षितत्वपर्य्यन्तस्याप्रसिद्धया समानवचनत्वनियमानापत्त्या सुन्दरा दारा इत्यस्यासाधुत्ववारणाय स्वाव्यवहितोत्तरविभक्ति तात्पर्य्यविषयसंख्याविरुद्धसंख्याविषयकबोधजनकत्वेन तात्पर्य्यविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताक स्वाभाववत्त्व सम्बन्धेन स्वविशिष्टं विशेषणवाचकपदं स्वसमानवचनमिति नियमस्वीकारे उर्वश्यप्सरस इत्यत्रापि समानवचनत्वापत्तिरतः स्वोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धत्व सम्बन्धावच्छिन्नप्रतियोगिताक स्वाभाववत्संख्याविवक्षाविषय विभक्तिप्रकृतित्व सम्बन्धावच्छिन्न प्रतियोगिताक स्वाभाववत्त्वसम्बन्धेन स्वविशिष्टं विशेषणवाचकपदं स्वसमानवचनमित्येव नियमः ।

"समानवचनत्वञ्च समानानुपूर्वीकत्वमेव, घटोद्रव्यमित्यादौ च स्थानिवृत्त्यानुपूर्वीमादाय समानवचनत्वमुपपादनीयम्"

प्र०—यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यविषयसंख्या विरुद्धसंख्यायाः अविवक्षितत्वं तत्रैव समानवचनकत्वमिति नियमोऽनुगतरूपेण परिष्करणीयः ।

उ०—स्वविशिष्टं पदं स्वसमानवचनम् वै० स्वप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्व, स्वाव्यवहितोत्तर विभक्तिवृत्तिप्रत्ययत्ववद्विभक्तिप्रकृतित्व, स्वोत्तरविभक्ति तात्पर्य्यविषय संख्या विरुद्धत्वसम्बन्धावच्छिन्न प्रतियोगिताक स्वाभाववत् संख्याविवक्षाविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व, स्वोत्तरविभक्तिवाच्य संख्यावच्छिन्नानुयो-

गिताकपर्य्याप्तिप्रतियोगिधर्मावच्छिन्नबोधकत्व तात्पर्य्य विषयत्व-स्वोत्तर समानानुपूर्वीकविभक्ति प्रकृतित्व प्रकारकसम्भावनाप्रयोज्यसाधुत्वप्रकारक सम्भावना विषयत्वाभाववत्त्वोभय सम्बन्धावच्छिन्नप्रतियोगिताक स्वाभाववत्त्वैतच्चतुष्टय सम्बन्धेन, । राजपदोत्तरविभक्त्या संख्याया अविवक्षां कृत्वा प्रयुक्ते राज्ञः पुरुष इत्यादिवाक्ये समानवचनत्व वारणाय प्रथमः, स्तोक पचावित्यादौ समानवचनत्व वारणाय द्वितीयस्तथा च।तुसन्धीयमानक्रियो व्यवधानान्न दोषः । मैथिली दारा इत्यादौ विशेष्यवाचक दारपदविशिष्टत्ववारणाय तृतीयः दारपदस्य विशेषणवाचकत्व विवक्षायां मैथिलीदारा इत्यादौ समानवचनत्ववारणाय तुरीयः संसर्गस्तथाच विशेष्यवाचक मैथिलीपदोत्तर विभक्तिः सुस्तद्वाच्यैकत्वसंख्यावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिदारत्वावच्छिन्नबोधकत्वेन तात्पर्य्यविषयस्वस्य स्वोत्तरसुविभक्ति समानानुपूर्वीक सुविभक्ति प्रकृतित्व प्रकारक सम्भावना प्रयोज्या यद्ययं दारशब्दः सुविभक्तिप्रकृतिः स्यात्तदा साधुः स्यादिति सम्भावना तद्विषयत्वाभावस्य च दारपदे सत्वान् नोभय सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व मिति न दोषः । पुष्पवन्तौ देव इत्यादौ समानवचनत्ववारणाय चतुर्थं सम्बन्धप्रतियोगितावच्छेदकीभूत प्रथमसम्बन्ध स्थाने तादृश पर्य्याप्तिप्रतियोगिधर्मविशिष्टत्वन्निवेश्यम् वै० स्वावच्छिन्नबोधकत्वेन तात्पर्य्यविषयत्व स्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छक्यतानिरूपितशक्तत्ताववत्त्वोभय सम्बन्धेन, पुष्पवन्तपद शक्यतायाश्च चन्द्रत्वसूर्य्यत्वोभयपर्य्याप्तत्वान्न दोष इति दिक् ॥८॥

प्र०—सम्पन्नो व्रीहिरित्यत्रैकवचनोपस्थितानां नानेकत्वानां प्रत्येकं नाना व्रीहिष्वन्वयाङ्गीकारे दोषं प्रदर्श्य, एकवचनार्थत्वम्परिष्क्रियताम् ।

७०—एकत्वमात्रं यद्येकवचनार्थः स्यात् स्यादपि सम्पन्नो व्रीहिरित्यादौ एकवचनोपस्थितानां नानैकत्वानां प्रत्येकं नानाव्रीहिष्वन्वयः, न त्वेवम्, तस्य केवलान्वयित्वेनार्थत एवलाभादव्यावर्त्तकत्वाच्च किन्तु सजातीयद्वितीय रहितत्वम् सः, तदपि स्व समभिव्याहृत पदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्स्वरूपेण, एवञ्च नानैकत्वानां तत्तद्व्रीहिनिष्ठभेदप्रतियोगितावच्छेदकतयान निरुक्तैकवचनार्थत्व सम्भवः, अतएव पशुना यजेत' इत्यादौ अनेकपशुकरणक यागान्नादृष्टसिद्धिः पशुनिष्ठैकत्वस्य विवक्षितत्वात् साजात्ये विशिष्टान्तानुपादाने अत्र घटोऽस्तीत्यादौ देशान्तरीय घटे एतद्घटगतैकत्ववान्नेतिभेद सत्त्वात् तादृशप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धिः।

वस्तुतः स्वविशिष्टमेकत्वमेकवचनार्थः वै० स्वाभाववत्त्व सम्बन्धेन. प्रतियोगितावच्छेदक सम्बन्धश्च स्वविशिष्टावच्छेदकतावत्स्वरूपः अत्र वै० स्वप्रयोज्यप्रकारतावच्छेदकतया विवक्षितसंसर्गावच्छिन्नत्व स्वविशिष्टनिष्ठभेदप्रतियोगितानिरूपितत्वाभ्याम् अत्रवै० स्वप्रकृत्यर्थतावच्छेदकधर्मवत्त्व स्वविशिष्ट समुदायत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वाभ्याम् समुदायत्वे वै० स्वप्रकृत्यर्थनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकत्व स्वसमभिव्याहृतपदार्थसंसर्गवृत्तित्व स्वसमभिव्याहृतपदार्थसंसर्गेतरावृत्तित्व, स्वसमभिव्याहृत पदार्थसंसर्गवृत्त्यभावाप्रतियोगित्वैतच्चतुष्टय सम्बन्धेन, स्वमेकवचनम्—यत्र देशे ब्राह्मणस्य शूद्रस्य च प्रत्येकमेकोघटस्तत्र 'अत्र ब्राह्मणस्य घटोऽस्तीति प्रयोगानुपत्तिः शूद्रघटेप्रकृत्यर्थतावच्छेदकघटत्वस्यस्वसमभिव्याहृतपदार्थतद्देशविद्यमानत्वसंसर्गस्य च सत्त्वात् अतः स्वविशिष्टसमुदायत्वेत्यादि तथा च शूद्रघटनिष्ठो यो ब्राह्मणघटैकत्ववान्नेतिभेदस्तदीय प्रतियोगितानिरूपितावच्छेदकतायांस्वविशिष्टनिष्ठभेद प्रतियो-

गितानिरूपितत्वविरहात् स्वविशिष्टावच्छेदकतात्त्वसम्बन्धाव-च्छिन्नप्रतियोगिताकस्वाभाववत्वं ब्राह्मणघटगतैकत्वेगतमिति-तादृशप्रयोगोपपत्तिः यतः शूद्रघटेस्वप्रकृत्यर्थतावच्छेदकघटत्वस्य सत्त्वेऽपि स्वविशिष्टो यो ब्राह्मणप्रतियोगिकस्वस्वामिभाव सम्ब-न्धघटितसम्बन्धसमुदायस्तद्वति समुदायत्वावच्छिन्नाधिकरण-ता विरहात्। सम्पन्नो व्रीहिरित्यादौ व्रीहित्वगतैकत्व वान्नेतिभेद-मादायाप्रसिद्धि वारणाय स्वप्रयोज्यप्रकारतावच्छेदकेत्यादि तथाच स्वाश्रयाश्रयत्वसम्बन्धेनैकत्वनिष्ठावच्छेकताकप्रतियोगिताकभेद-विरहान्न दोष इति केचित्।

नच पशुना यजेतेत्यत्र एकत्वविशिष्टपशुकरणकयागेइष्ट-साधनत्वम् प्रतीयते ततश्च तादृश यागान्तरसम्बन्धवति पश्वन्तरे एतद्यागपशुसजातीयत्वसत्त्वादेकवचनाथाप्रसिद्धिरिति वाच्यम् एतत्पशुवृत्त्येतद्यागसम्बन्धस्य तादृशयागान्तरीयपशावभावात्, नरेण नरायजेतेत्यात्रापि कर्त्तरियागस्य कतत्वसंसर्गः, करणेच-करणत्व संसर्गस्तथाच कर्तृकरणयोर्मिथः साजात्यविरहान्न दोषः, वहुब्राह्मणे कर्तृकशयनाधिकरणस्थले ब्राह्मणः शेते इति प्रयोगाप-त्तिस्तु न पदार्थसंसर्गित्वमित्यत्रपदार्थपदस्य पदार्थतावच्छेदक-परत्वेन स्वावच्छिन्ननिरूपितकर्तृत्वस्य शयनत्वरूपपदार्थतावच्छे-दक सम्बन्धस्य ब्राह्मणान्तरेऽपि सत्वेन एकत्वे भेदप्रतियोगिता-नवच्छेदकत्व विरहात्, पशुना यजेतेत्यत्र स्वावच्छिन्न निरूपित-करणत्वस्य यागत्वसम्बन्धस्य यागान्तरीय पशौ सत्त्वेऽपि यज-धात्वोर्यागत्वोपलक्षित तद्व्यक्तित्वावच्छिन्ने लाक्षणिकत्वेन तद्-व्यक्तित्वसम्बन्धस्य यागान्तरीय पशावभावात ॥ इति दिक्॥

प्र०—पदार्थः पदार्थेनान्वेति नतुपदार्थैकदेशेनेत्यस्य मूलभूतं कार्य्यकारणभावस्वरूपं निर्दुष्टं सपदकृत्यं समन्वयपुरस्सरं प्रतिपादनीयम्

उ०—स्वप्रयोज्य विशेष्यत्व स्वेतरपदप्रयोज्यप्रकारताविशिष्टत्वोभयसम्बन्धेनशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वविशिष्टविशेष्यता सम्बन्धेन स्वजन्योपस्थितिः कारणम् वैशिष्ट्यञ्च विशेष्यतायां स्वजन्यतावच्छेदकत्व स्वजन्यतावच्छेदकप्रकारत्वासामानाधिकरण्योभय सम्बन्धेन, प्रकारतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वाश्रयनिरूपितत्वाभाववद्वृत्तित्वोभयसम्बन्धेन, सर्वत्र स्वपदेन पद ग्राह्यम्, तेन जातित्वविशिष्टघटत्वविशिष्टपरतच्छब्दघटित नित्यः स इतिवाक्यान्नजातित्वे नित्याभेदान्वय बोधावत्तिः तत्पदजन्योपस्थितीयघटत्वनिष्ठविशेष्यतायां तत्पदजन्यतावच्छेदकत्व सत्त्वेऽपि तत्पदजन्यतावच्छेदकीभूतघटत्वनिष्ठप्रकारत्वासामानाधिकरण्य विरहात्, पशुपदजन्यबोधीयलोमनिष्ठप्रकारतानिरूपितलाङ्गूलनिष्ठविशेष्यतायां पशुपदेतरपदप्रयोज्यप्रकारतानिरूपितत्व विरहात् कार्य्यतावच्छेदकानाक्रान्तत्वेन न शाब्दबोधानुपपत्तिः देवदत्तस्य गुरुरित्यादौ गुरुत्वत्वनिष्ठ प्रकारतानिरूपितगुरुत्व निष्ठविशेष्यतायां गुरुपदजन्यतावच्छेदकीभूतप्रकारतासामानाधिकरण्यविरहात् शाब्दबोधानुपपत्तिस्तु न, स्वेतरदेवदत्तपदप्रयोज्यप्रकारताविशिष्टत्व विरहेण कार्य्यतावच्छेदकानाक्रान्तत्वात् स्वनिरूपितत्व सत्त्वेऽपि गुरुत्वनिष्ठविशेष्यतायां स्वाश्रयदेवदत्तनिरूपितत्वाभाववद्वृत्तित्व विरहादिति दिक् ॥०॥

प्र०—नीलस्यघट इत्यत्रबोध आपाद्य परिह्रियताम्, प्रदर्श्यताञ्च व्याससमासोभयसाधारणकाँचास्वीकारे दोषः ?

उ०—ननु नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादि शाब्दबोधकारण कूटसत्त्वात् अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारता निरूपित घटत्वावच्छिन्न विशेष्यताकः शाब्दबोधः कुतोन न च समविभक्तिकपदोपस्थापितयोरेवाभेदान्वयबोध इति नियमभङ्ग-

प्रसङ्गः, तस्य सामग्र्याः कार्य्यजननेऽकिञ्चित्करत्वात् इति चेन्मैवम् तथाहि तादृशशाब्दबोधम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाँक्षाज्ञानम् कारणमित्येवंरीत्यैक त्रिंशतिराकाँक्षाज्ञानानि कारणानि, विनिगमनाविरहात् स्वन्तघटपदसमभिव्याहृतस्वन्तनीलपदत्वज्ञानस्यापि कारणत्वे द्वाचत्वारिंशदाकाँक्षाज्ञानानि कारणानि, समासस्थलीयतादृशबोधम्प्रति च नीलपदाव्यवहितोत्तरघटपदत्वरूपाकाँक्षाया घटपदाव्यवहितपूर्ववर्त्तिनीलपदत्वरूपाकाँक्षायाश्चज्ञानं कारणम्, एवञ्चतादृश शाब्दबोधम्प्रति चतुश्चत्वारिंशदाकाँक्षाज्ञानानि कारणानि, तेषाञ्चैकमप्याकाँक्षाज्ञान नीलस्य घट इत्यादौ नास्तीतिनापत्तिः, नचैतेषाञ्च सर्वेषामाकाँक्षाज्ञानानां सर्वत्रासत्वात् व्यभिचारभीत्या स्वन्तनीलपदसमभिव्याहृत स्वन्त घटपदत्वरूपा काँक्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधम्प्रति स्वन्तनीलपदसमभिव्याहृत स्वन्तघटपदत्वरूपाऽऽकाँक्षाज्ञान कारणमित्यादिरीत्या चतुश्चत्वारिंशदाकाँक्षाज्ञानकार्य्यकारणभावकल्पनस्यावश्यकत्वे— सामान्यस्य अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य तत्तदाकाँक्षाज्ञानकार्य्यतावच्छेदकानाक्रान्ततया योग्यताज्ञानादिबलादापत्तिः कुतो नेति वाच्यम् व्यापकधर्मावच्छिन्नकार्य्यजननीये व्याप्यधर्मावच्छिन्न सामग्र्या अपेक्षितत्वेन तत्तदाकाँक्षाज्ञानविशेषासत्त्वेनापादयितुमशक्यत्वात् ॥०॥

समासव्यासमसाधारणविशेषणपदनिष्ठविशेष्यवाचकपदाप्रकृतिक विभक्त्यप्रकृतित्वरूप विरुद्धविभक्तिराहित्यस्याकाँक्षात्वे नीलो घट इत्यादौ नीलपदोत्तर सोः घटपदोत्तरसुभिन्नतया तादृशविरुद्धविभक्तिराहित्यासम्भवः, विशेष्यवाचक पदोत्तरा-

वृत्तिविभक्ति विभाजक धर्मवद्विभक्तिराहित्यस्य तत्त्वे विभक्तित्व
ज्ञानदशायां शाब्दबोधानुपपत्तिः स्वरूपतः तस्य कारणत्वे नी
घट इत्यादौसुपदेऽसुपदत्वभ्रमदशायां शाब्दबोधापत्तिः नील
घट इत्यादौ षष्ठ्यादेः सुपदत्वभ्रमदशायां शाब्दबोधानुपपत्तिश्च

स्वोत्तरसुपदभिन्नपदाद्युत्तरत्वविशिष्टस्वोत्तरत्वादिरूप . सं
व्यवहितोत्तरत्वसम्बन्धेन नीलादिपदविशिष्ट सुबन्तघटादिपदत्
स्यतत्त्वे समासस्थलीयाया आकाँक्षाया अतिरिक्ताया अकल्पने
लाघव सत्त्वेऽपि घटीयलाक्षणिक घटपदेन नीलपदस्य कर्मधार
कृत्वा तेनसहरूपपदस्य कर्मधारये कृते नीलघटरूपमित्या
घटपदस्य सुबन्तत्वाभावेन अन्यादृश्या अप्याकाँक्षायाः समा
स्थल उपगन्तव्यतया लाघवाभावः !!

प्र०—नीलंघटमानयेत्यादावभेदस्य विशेषणविभक्त्यर्थत्वे अभे
पदार्थनिर्वचन मुखेन प्रसक्तदोषानाशङ्क्य परिहृत्य
संसर्गतावादिमतमुपपादनीयम् ।

उ०—अभेदस्य भेदत्वावच्छिन्नाभावरूपत्वेऽप्रसिद्धिः, भेदप्रतियो
काभावरूपत्वे नीलभेदजलाभयाभावमादाय नीलंजलमित्यादि
क्यस्य प्रामाण्यापत्तिः, नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थ
नीलादिपदार्थानन्वयः । भेदप्रतियोगिकाभावस्य विभक्त्यर्थत्वं स्वी
कृत्यनीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावबोधस्तु
पदार्थद्वयसंसर्गभानस्यैवाकाँक्षानियम्यत्वात् । भेदस्य अभाव
च विशेषण विभक्त्यर्थत्वेनीलघटः" इत्यादावप्यभेदान्वयबोध
पत्तिः द्वितीयाजन्याभेदबोधम्प्रति द्वितीयान्तविशेष्यवाचकप
समभिव्याहारस्य प्रयोजकत्वे प्रमेयत्वावच्छिन्नभेदस्य कम्बु
वादिमत्त्वावच्छिन्नभेदस्य चाप्रसिद्ध्या प्रमेयोघटः कम्बुग्रीवा
मानघट इत्यादावनुपपत्तिः ।

नीलपटपरनीलपद घटितस्य नीलोघट इत्यादिवाक्यस्य प्रामाण्यापत्तिश्च, अतएव विशेष्यतावच्छेदकीभूतनीलत्वादिकमपि न विशेषण विभक्त्यर्थः ।

संसर्गता मते च तत्तत्व्यक्तित्वावच्छिन्नभेदाभावस्यैव नीलत्वादि प्रकारेणभासमानानां तत्तद्व्यक्तीनां स्वस्मिन् सम्बन्धतेति न दोषः । तस्यविशेषणविभक्त्यर्थत्वन्न सम्भवति अपूर्वव्यक्तिनिष्ठ तद्व्यक्तित्वेशक्तिग्रहासम्भवेन बोधानुपपत्तेरित्यपिन विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः प्रतियोगिनःसम्बन्धतयाभानात् अन्यथा विशिष्ट वैशिष्ट्यबुद्धित्वानुपपत्तेः तस्माद्विशेषणविभक्त्यर्थोऽभेदस्तादात्म्यम् तच्च स्वसामानाधिकरण्य स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरुपम् तादृशंधर्मस्तत्तद्व्यक्तित्वादिरुपः । अपूर्वव्यक्तिनिष्ठस्यापितस्य सामान्यप्रत्यासत्त्या सुग्रहत्वम्, संसर्गतावदिनापि एतादृशानुगताभेदस्यैव संसर्गत्वमङ्गीकार्य्यम् न तु तत्तद्व्यक्तित्वावच्छिन्न भेदाभावकूटस्य तथासति यत्किञ्चित्तादृशाभावतात्पर्य्येण नीलेऽपि न नील इत्यादि वाक्यस्यप्रामाण्यापत्तिरिति दिक् ॥०॥

विशेषण विभक्तेरभेदार्थकत्वे नञो भेदबोधकत्वाभावः घटोननील इत्यादौ नीलाद्यभेदाभावस्यैव प्रत्ययात् । अनीलं घटमानयेत्यादौच सामानाधिकरण्यानुरोधेन नञोभेदवत्यैव लक्षणाया उपगन्तव्यत्वात् । अतोऽभेदस्य संसर्गत्वमेवोचितम्, किञ्च तस्य संसर्गतापगमेऽपि गौरव विरहेण विशेषणविभक्तेस्तत्र वृत्तिकल्पनं नोचितम् । शक्तिभ्रमस्वारसिक लक्षणाग्रहस्थलेऽपि संसर्गतावादिना अभेदस्य संसर्गत्वमेवोपेयते इति न संसर्गप्रकारोभयविधबोधे द्विविधयोग्यताज्ञानादीनां द्विविधबोधहेतुत्वेन कार्य्यकारणत्वाधिक्यम् ।

प्र०—द्वितीयादिना अभेदबोधने द्वितीयाद्यन्तविशेष्यवाचकप
समभिव्याहारस्य प्रयोजकत्वमुक्तंभट्टाचार्य्येण अत्र आदि
तृतीया परिगृह्यतेचेत् धान्येन धनवान् प्रकृत्याचारुरित्याद
चभेदान्वयबोधानुपपत्तिः, तस्या अपरिग्रहे सुन्दरेण ध
इत्यादावभेदान्वयापत्तिः, इत्याशंकाया किमुत्तरम् ।

उ०—अत्र आदिना प्रकृत्यादिभ्य उपसंख्यानमित्येतद् विहित तृती
तिरिक्त तृतीया गृह्यते अतोनोक्तदोषः ।

प्र०—तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन तत्तद्व्
क्तित्वावच्छिन्नप्रतियोगिताकभेदाभावस्य संसर्गत्वे को दो
तदुद्धारणाय च केनरूपेण च संसर्गता तत्स्पष्टं वक्तव्यम्।

प्र०—तत्तद्व्यक्तित्वावच्छिन्नाभावस्य विशिष्य संसर्गत्वे दो
मुपपाद्य तादात्म्य स्वरूपमनुगतीकृत्य वक्तव्यम् ।

उ०- विभक्त्यर्थभेदे नीलत्वादिना तत्तद्व्यक्तीनां तत्तद्व्यक्तित्वा
च्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः तादृशभेदस्य च त
द्व्यक्तिभेदत्वावच्छिन्न प्रतियोगिताकत्वसम्बन्धेन अभावे अन्व
तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इत्युच्यते सच न समीचीन
विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया: प्रतियोगि
संसर्गतया प्रतीतेः, अन्यथा विशिष्ट वैशिष्ट्यावगाहि बुद्धि
नोपपद्येत विशेष्ये विशेषणमितिरीत्या अभावज्ञानंच न कश्चि
दङ्गीकरोति अभावबुद्धिस्तु विशिष्टवैशिष्ट्यबोधमर्यादांनाति
शेतइति दर्शनात् ।

"अभेदस्तादात्म्यम् तच्च स्वसामानाधिकरण्य स्वप्रतियोगि

वृत्तित्वाभ्याम् भेदविशिष्टान्यत्वरूपम् । अयमेव विशेषण विभक्तेरर्थः । ईदृशो धर्मस्तत्तद्व्यक्तित्वादिरेव ।

०—नीलपटपरनीलपदघटितस्य नीलो घट इति वाक्यस्य प्रामाण्यमापाद्य निरस्य च अभेदस्वरूपं परिष्कृत्य तस्य प्रकारतया संसर्गतया वा भानमुचितमिति निरूप्यताम् ।

०—भेदाभावस्य विशेषणविभक्त्यर्थत्वे नील पटपरनीलपद घटितस्य नीलो घट इति वाक्यस्य प्रामाण्यं स्यात् घटस्यापि नीलत्वात् । पटवृत्तिगुणात्मकनीलत्वस्य घटेऽसत्त्वेन तादृशापत्तिवारणेतु पटपरद्रव्यपदघटितस्य द्रव्यं घट इति वाक्यस्य प्रामाण्यं स्यात् इत्यूहनीयम् ।

०—घटो घट इत्यत्र शाब्दबोधवारणाय किमुक्तं गदाधरेण ?

०—घटो घट इत्यत्र घटत्वमात्रावच्छिन्नविशेष्यतानिरूपितघटत्व मात्रावच्छिन्नप्रकारताकशाब्दबोधस्याप्रसिद्धयैवनापत्तिः ? धर्मितावच्छेदकता सम्बन्धेन घटत्वमात्रावच्छिन्नप्रकारताकशाब्दबोधस्य द्रव्यत्वे प्रसिद्धस्य घटत्वे आपत्तिवारणाय तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरुपित विशेष्यता वच्छेदकता सम्बन्धेन शाब्दबोधम्प्रति तद्धर्मभेदस्य कारणत्वमभ्युपगन्तव्यम् तेन घटत्वे घटत्वभेदविरहान्नापत्तिः ।

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानम्प्रति तद्धर्मभेदस्य कारणत्वम् एवञ्चाभेदसम्बन्धावच्छिन्न घटत्वावच्छिन्न प्रकारतानिरूपित विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधव्यापकस्य घटत्वान्यवृत्तिविषयता सम्बन्धेन बोधस्य घटत्वभेदघटित सामग्र्या अपेक्षितत्वेन घटत्वे तद्विरहान्नापत्तिः ।

प्र०—अभेदान्वयबोधश्चविरूपोपस्थितयोरेवेति व्युत्पत्तिः घटोघ
दण्डवान् दण्डवान् पाकं पचतीत्यादौ तथाविधान्
बोधानुदयात्, इति भट्टगदाधरोक्ता दर्शितफला व्युत्पत्ति
कार्य्यकारणभावमूलिकाप्रतिबध्यप्रतिबन्धकभावमूलिका वे
स्फुटमुपपाद्य तत्रोपात्तं वैरूप्यं कुत्रान्वेतीति गुणदोषनिरू
पणापुरस्सरमुपवर्ण्यं च अग्रे अथेत्यादि सन्दर्भस्यसङ्क्षेपे
आशयोवर्णनीयः ।

उ०—अभेदान्वयबोधश्चेत्यादिव्युत्पत्तिः तद्धर्मावच्छिन्नाभेदसम्बन्
वच्छिन्न प्रकारतानिरूपित विशेष्यतावच्छेदकता सम्बन्धेन शा
बुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदःकारणमिति कार्य्यकारणभा०
मूलिका ।

विरूपोपस्थितयोरित्यत्र विभिन्नरूपाभ्यामुपस्थितौ याभ्
पदाभ्यान्ते विरूपोपस्थिते पदे तयोर्विरूपोपस्थितयोरित्यर्थः, प
यर्थश्च जन्यत्वन्तस्य चाभेदान्वय बोधेऽन्वयः, एवञ्चवैरूप्यस्य वि
तस्य च करणतया उपस्थितावन्वयः, एतेन विरूपोपस्थितयोरि
द्विवचनार्थद्वित्वस्य विरूपोपस्थितेनीलघटादौकथमन्वयो नील
टादिपदार्थे द्वित्वाभावादित्यपास्तम् प्रागुक्तविग्रहेण विरूपोपस्थि
योरित्यस्यपदपरत्वेन पदयोर्द्वित्वान्वयस्यात्राबाधितत्वात्

अथधर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वेप्रसिद्धोऽभेदस
न्धावच्छिन्न घटत्वावच्छिन्नप्रकारताकःशाब्द बोधो घटत्वे कुतो

अभेदसम्बन्धावच्छिन्न घटत्वावच्छिन्नप्रकारतानिरूपित
टत्वावच्छिन्न विशेष्यताकशाब्दबोधस्तुनापादयितुं शक्योऽप्रसि
त्वात् । घटोनीलघट इत्यादौ विधेयांश अधिकावगाहिशाब्दब
स्याप्रसिद्धत्वेपि तस्य विशेषणतावच्छेदक विधयानीलादिभ

नियामकनीलाद्युपस्थितितात्पर्य्यज्ञानविशेषादिघटिताया एव सामग्र्याः प्रयोजकत्वात् इतिचेन्मैवम् योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेन आत्मनिष्ठप्रत्यासत्त्याऽनन्तकार्य्यकारणभावकल्पनापेक्षया धर्मितावच्छेदकमनिवेश्य धर्मितावच्छेदकता सम्बन्धेन अभेद सम्बन्धावच्छिन्न घटत्वावच्छिन्न प्रकारक शाब्दबोधम्प्रति धर्मितावच्छेदकता सम्बन्धेन अभेद सम्बन्धावच्छिन्न घटत्वावच्छिन्न प्रकारताक योग्यताज्ञानस्य कारणत्वे लाघवेन तद्बलेन घटत्वेतादृश शाब्दबोधस्याऽऽपादन सम्भवेऽपि तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्न प्रकारतानिरूपित विशेष्यतावच्छेदकता सम्बन्धेनशाब्दबोधम्प्रति. तद्धर्मभेदस्यकारणत्वान्नदोष इति दिक् ॥०॥

प्र०—घटोनीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्रदर्शितरीत्या सोऽप्युपपादनीय इति गदाधरः । अत्रान्यत्र प्रदर्शित प्रकारः कीदृशः ? ।

घटो नीलघट इत्यत्र शाब्दबोधोपपत्तये उक्तकार्य्यकारणभावे तद्धर्मावच्छिन्नप्रकारतास्थाने तद्धर्ममात्रावच्छिन्नत्वं निवेश्यम् प्रकृते च नीलघटनिष्ठप्रकारतायां घटत्वमात्रावच्छिन्नत्वविरहेण न कार्य्यतावच्छेदकाक्रान्तत्वम् ।

वस्तुतः तद्रूपवृत्ति प्रकारतानिरूपित विशेष्यतावच्छेकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ तद्रूपभेदस्य तद्रूपव्यापकभेदस्य वा कारणत्वं वक्तव्यम् वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्न प्रतियोताकपर्य्याप्त्यनुयोगितावच्छेदकत्व सम्बन्धेन, अवच्छेदकतायां निरवच्छिन्नत्व निवेशस्याप्यत्रैव तात्पर्य्यम् निरूपितत्वञ्च साक्षात्परम्परासाधारणमिति दिक् ॥०॥

प्र०—वस्तुतस्तुतद्धर्मान्यवृत्ति विषयतासम्बन्धेन ज्ञानं प्रतितद्ध भेदत्वेन हेतुता लाघवादिति ग्रन्थः, अत्रेदृशकार्य्यकारणभ कल्पने किं मानम्, कल्पनेऽपिकथं घटो घट इत्य शाब्दबोधापत्ति वारणम् ? ॥०॥

उ०—तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्न प्रकारतानिरूपित विशेष्य वच्छेदकता सम्बन्धेन शाब्दबोधम्प्रति तद्धर्मभेदस्य कारणत्वे घटः घटः स इत्यादौजातित्वादि विशिष्टघटत्वाच्छिन्न प्रका विशेष्यताकशाब्दबोधस्योपपत्तये विशेष्यस्य प्रकारत्वयोरवच्छे कत्वे निरवच्छिन्नत्वम् , घटोनीलघट इत्यन्वयबोधोपपत्तये प्रक तायां तद्धर्मनात्रावच्छिन्नत्वम् सस इत्यादिवाक्यात् जातित्वाव च्छिन्न धर्मितावच्छेदकताक तद्धर्मावच्छिन्नप्रकारतावच्छेदताका न्वयबोधवारणाय तद्धर्मावच्छिन्नावच्छेदकताक प्रकारतानिरू धर्मितावच्छेदकतावच्छेदकता प्रत्यासत्त्या शाब्दबोधम्प्रति तद्ध भेदस्यापि पृथक् कारणत्वम् दण्डवान् दण्डवान् इत्यादिवाक्या दण्डसंयोगत्वावच्छिन्न रति तदवच्छिन्नवदभेदान्वयबोधवारण दण्डसयोगत्वावच्छिन्नावच्छेदकताक प्रकारतानिरूपित विशेष्य निरूपित संयोगत्वावच्छिन्नावच्छेदकता निरूपितावच्छेदकता च्छेदकता सम्बन्धेन शाब्दबोधे दण्डत्वादिभेदस्य पृथक् कारणत्व अवच्छेदकतायां निरवच्छिन्नत्व निवेशश्चेति महद्गौरवम् अतः—तद्धर्मान्यवृत्तिविषयता सम्बन्धेनज्ञानं प्रति तद्धर्मभेदः का णमिति कार्य्यकारणभावउक्तोगदाधरेण ॥०॥

प्र०—येन सम्बन्धेन यद्धर्मावच्छिन्नकार्य्यस्य व्यापकतेत्या ग्रन्थस्योपक्रमोपसंहारौ निरूपणीयौ ॥

उ०—ननु द्रव्यपदजन्य द्रव्यत्वावच्छिन्नोपस्थितिविरहकालेऽपि द्र त्वादौ धर्मितावच्छेदकतासम्बन्धेन तादृश शाब्दबोधवारण

समानप्रकारता प्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधहेतुत्व कल्पनं व्यर्थम् प्रकारता सम्बन्धेन शाब्दबोधे प्रकारतासम्बन्धेनोपस्थितेः कारणत्वेऽपि धर्मितावच्छेदकता सम्बन्धेन शाब्दबोधे तस्या अहेतुत्वेनापत्तितादवस्थ्यात् इत्यत आह-येन सम्बन्धेनेत्यादि । अयंभावः—व्याप्यकार्ये जननीये व्यापकसामग्र्या अपेक्षितत्वेन धर्मितावच्छेदकता सम्बन्धेन शाब्दबोधे व्याप्ये जननीये व्यापक समग्र्याः प्रकारतासम्बन्धेनोपस्थिति घटिताया-अवश्यापेक्षणीयतया न द्रव्यपदजन्योपस्थितिमन्तरा शाब्दबोधापत्तिरिति ।

वस्तुतस्तु स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपित विशेष्यतावच्छेदकताविशिष्ट प्रकारता सम्बन्धेनोपस्थितिः स्वजनक ज्ञानीयवृत्तिनिष्ठ प्रकारतानिरूपित विशेष्यतावच्छेदकता विशिष्ट प्रकारता सम्बन्धेन शाब्दबोधम्प्रति कारण स्वीकार्यम् । अतएव-प्रकारता सम्बन्धेन नालादिपदार्थे जायमानशाब्दबुद्धिम्प्रति प्रकारता सम्बन्धेनोपस्थित्यभावेऽपि नव्यभिचार इति दिक् ॥८॥

०—परामर्शकारणता विचारदर्शितरीतिः का ?

०—यथाधर्मितावच्छेदकता सम्बन्धेनतल्लिङ्गकानुमितौ धर्मितावच्छेदकता सम्बन्धेन तल्लिङ्गकपरामर्शत्वेन कारणतायां यत्रभावेज्ञानमप्रमेत्यप्रामाण्यज्ञानम् अनन्तरवह्निव्याप्यधूमवान् पर्वतइति परामर्शःततो वह्निव्याप्यालोकवद्द्रव्यमिति परामर्शस्ततो वह्निमान् पर्वतः वह्निमद्द्रव्यमिति समूहालम्बनानुमितिस्तत्र तस्या धूमालोकोभयलिङ्गिकाया द्रव्यत्वपर्वतत्वयोरुभयत्र सत्वेनतल्लिङ्गकपरामर्शस्य तत्रासत्वाद् व्यभिचारवारणाय तल्लिङ्गकपरामर्शधर्मितावच्छेदकताविशिष्ट धर्मितावच्छेदकतायाः कार्यतावच्छेदक सम्बन्धत्व मुपेयते तथाऽत्रापि वृत्तिज्ञान धर्मितावच्छेदकता विशिष्टप्रकारताया एव कार्य्यतावच्छेदक सम्बन्धत्वं स्वीकार्यमित्यर्थः ॥

प्र०—धर्मितावच्छेदकतायास्तत्कार्य्यतावच्छेदकता विरहेऽपि द्रव्यत्वादिनिष्ठायास्तस्यास्तत्कार्य्यतावच्छेदकधर्मघटकत्वादि गदाधरपङ्क्तेः कोऽभिप्रायः ? ।

उ०—अथाभेदसम्बन्धेन घटविशिष्टं द्रव्यमित्याकारकयोग्यताज्ञा समवायसम्बन्धेनात्मनिवर्त्तते शाब्दबोधस्तु धर्मितावच्छेद सम्बन्धेन द्रव्यत्वइति कार्य्यकारणयोः सामानाधिकरण्याभा कथन्तादृश योग्यताज्ञानादिघटित सामग्र्या धर्मितावच्छेदक सम्बन्धेन द्रव्यत्वेशाब्दबोधजननमित्यत आह-धर्मितावच्छेदक यास्तत्कार्य्यतावच्छेदकसम्बन्धता विरहेऽपि-इत्यादि ।

तत्कार्य्यतेत्यत्र तत्पदेन समवायेनकारणीभूतं योग्यताज्ञा ग्राह्यम् , तत्कार्य्यताशाब्दबुद्धौ तदवच्छेदक सम्बन्धत्वं समवा स्यनतु धर्मितावच्छेदकताया इत्यर्थः ।

द्रव्यत्वादिनिष्ठायास्तस्या इति-धर्मितावच्छेदकताया इत्य तत्कार्य्यतावच्छेदक सम्बन्धघटकत्वादित्यत्रापि तत्पदेन सम येन कारणीभूतं योग्यताज्ञानं परामृश्यते तस्यकार्यतावच्छे धर्मः—अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्न प्रकारतानिरू द्रव्यत्वावच्छिन्न विशेष्यताकशाब्दबुद्धित्वम् तद्घटकत्वञ्च द्रव्य निष्ठधर्मितावच्छेदकतायाः ।

अयंभावः समनियतधर्मावच्छिन्ने कार्य्येजननीये समनि तधर्मावच्छिन्नकार्य्योत्पादक सामग्र्या अपेक्षितत्वेन धर्मिताव च्छेदकतासम्बन्धेन तादृशशाब्दबुद्धित्वस्य समवायेनतादृशशाब्द न्धत्वसमनियततया समवायेन योग्यताज्ञानादिघटित साम अपेक्षितत्वेन तया सामग्र्यैव धर्मितावच्छेदकतासम्बन्धेन द्र त्वे तादृशशाब्दबोधजननम् नतु तत्र सामग्र्यन्तरापेक्षा, अ शाब्दबोधादिनानाकार्य्याणां कालिक सम्बन्धेन कालेजायमा न सामग्र्यन्तरापेक्षेतिः ॥०॥

१८—निपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताद्दशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वादिति नियमघटकपदानां व्यावृत्तिम्प्रदर्श्य याचकसम्बन्धीत्यत्र प्रातिपदिकार्थे सम्बन्धे याचकपदार्थस्य निरूपितत्व सम्बन्धेनान्वयेऽपि कथन्न नियमव्याहतिरित्युपपाद्यताम् ! ॥

२०—घटोनपट इत्यादौ नञर्थभेदेघटस्य प्रतियोगितासम्बन्धेन भेदस्य च स्वरूपसम्बन्धेनपटेऽन्वयबोधान्निपातातिरिक्तेति। घटपदस्य घटप्रतियोगिके लक्षणाभ्युपगमेतु भूतलेनघटः' इत्यादौ भूतले घट एतद्वाक्यजन्यबोधनिवर्त्यत्वानुरोधात् भूतलवृत्तित्वाभाववान् घट इतिबोधश्यावश्यकत्वेन तत्रव्यभिचारवारणाय निपातातिरिक्तत्वेति । तत्रापिनञ्पदस्याभाववतिलक्षणामभ्युपेत्य भूतलवृत्तित्वाभाववतोऽभेदान्वयबोधस्वीकारस्तु न युक्तः भूतलवृत्तित्वाभावप्रकारक बुद्धित्वाद्यपेक्षया अभेदसम्बन्धेन भूतलवृत्तित्वाभाववत्प्रकारकबुद्धित्वस्य प्रतिबध्यतावच्छेदकत्वे गौरवात् ।

नीलोघट इत्यादौ नामर्थयोः स्तोकंपचतीत्यादौनामार्थधात्वर्थयोरभेनसाक्षादन्वयबोधात् व्यभिचारवारणाय भेदेनेति । तण्डुलंपचतीत्यादौ नामार्थधात्वर्थयोः—परम्परयाभेदान्वयबोधाद्व्यभिचार वारणायसाक्षादिति, याचकसम्बन्धीत्यादौ याचकपदस्ययाचक निरूपिते लक्षणा तस्यच सम्बन्धपदार्थेऽभेदेनैवान्वय इति न नियम व्याहतिः ॥०॥

२१—अथ राजा पुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोधः ? सामग्र्याः कार्य्यजननेउक्तानयम भङ्गरूपायाः प्रयोजनक्षतेरकिञ्चित्करत्वादित्युपक्रम्य अत्र केचिदित्यादिना यत् प्रतिपादितन्तत् समालोचनीयम् ।

प्र०—विशेष्यतासम्बन्धेननामार्थप्रकारकभेदान्वयबोधम्प्रति विशेष्य
सम्बन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पने राजापुरुष इत्य
भेदान्वयबोध वारणेऽपि राज्ञः पुरुषइत्यादौ स्वत्वस्यापि म
तया तत्प्रकारकबोधे पुरुषस्य विशेष्यत्वानुपपत्तिः। तत्तन्नाम
जन्य तत्तन्नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति प्रत्ययजन
परिस्थतित्वेनहेतुत्वे च राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येता
वाक्यद्वयजन्य समूहालम्बनशाब्दबोधे पुरुषस्य राजसम्बन्ध
शेष्यतयाभानानुपपत्तिः। प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यत
दर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रत्येव तथात्वे यत्र राजापुरु
इत्यादौ पुरुषपदाधीन पुरुषोपस्थितौ सुप्रत्ययवशादेकत्वमपि
चरीभूतम तत्रसुप्रत्ययजन्यसमूहालम्बनोपस्थितेर्विशेष्यता स
न्धेन पुरुषेऽपि सत्त्वात् राजापुरुष इत्यादौ भेदान्वयबोधाप
स्तदवस्था. प्रत्ययजन्यतावच्छेदकीभूत विशेष्यतासम्बन्धेन प्र
यजन्योपस्थितेर्हेतुत्वेच समानाकारकज्ञानीय विशेष्यताया ऐक्य
प्रत्ययजन्यलक्षणाधीन पुरुषोपस्थितिविशेष्यतायाः शक्तिज्ञाना
नपुरुषोपस्थितिविशेष्यतायाश्चाभिन्नतयोक्तातिप्रसङ्गतादवस्थ्या
स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यता विशिष्ट
शेष्यता सम्बन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्वमपि न सम्यक् प्र
यत्वस्यानुगतानतिप्रसक्तस्य दुर्वचत्वात् राजसम्बन्धः पुरुषइत्या
सम्बन्धपदेकम्पदत्वभ्रमदशायां सम्बन्ध विशेष्यकराजप्रका
कान्वयबोधानुपपत्तेः, राज्ञः पुरुषइत्यादौ ङसपदे सम्बन्धपद
भ्रमदशायां सम्बन्धविशेष्यकराजप्रकारकान्वयबोधापत्तेश्च, प्र
यत्वप्रकारक ज्ञानविषयपदजन्योपस्थितेः कारणत्वे प्रत्ययत्वानु
स्थितिदशायांशाब्दबोधानुपपत्तिरिति।०॥

प्र०—स्वत्वस्य संसर्गविधयाप्रकारविधयावाभानमिति विचारा
सरे राजाभावव्याप्यराजस्वत्वाभाववान्पुरुषइत्यादितादृश

निश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशाधिक्येन लाघवानवकाशादित्यनेन स्वत्वप्रकारकबोधएवोचित इत्यभिप्रायोव्यञ्जितः परन्तु राजस्वत्वाभावव्याप्यराजाभाववान् पुरुषइत्यादि निश्चयस्य तदभावव्याप्यवत्तानिश्चय मुद्रया तादृशवाक्यजन्यशाब्दबोधेविरोधितयातथाविधस मग्रीप्रतिबन्धकतायां निवेशाधिक्यात् स्वत्वसंसर्गतापक्षएवोचित इतिशङ्कायाः किमुत्तरम् ?

०—घटादिविभिन्नविषयकप्रत्यक्षम्प्रति प्रतिबन्धकत्वंयद्यप्युभयमते समानम् तत्रप्रकारतामते सामग्र्यामधिकवस्तुप्रवेशगौरवेऽपितावधिक प्रतिबन्धकतागौरवम् तथापि संसर्गतामते राजस्वत्वाभाववान् पुरुषः सुन्दरः प्रमेयोवाच्य इत्यादिभिन्नविषयकप्रत्यक्षसहस्रंप्रति राजाभाववत्स्वत्वंप्रमेयमवाच्यमभिधेयमित्यादिप्रत्यक्षसहस्रंप्रतिच शाब्दसामग्र्याः प्रतिबन्धकतासहस्रस्य कल्पनीयत्वाद्गौरवं स्पष्टमेवेतिकेचित् ॥०॥

०—अन्यादृशप्रत्यक्षस्थलीय प्रतिबन्धकतया तु न त्वन्मतेऽपि निर्वाह इत्ययं ग्रन्थ उपपादनीयः ? ।

०—ननु घटवद्भूतलमित्यादि प्रत्यक्षसामग्रीसत्त्वे राज्ञः पुरुषः, एतद्वाक्यजन्य शाब्दबोधनिर्वाहाय विभिन्नविषयकप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् सर्वैरेव मन्तव्यंकिमिति विशेषेण संसर्गतावादिनम्प्रति गौरवोद्भावनमित्यत आह-अन्यादृशप्रत्यक्षस्थलीयेति। अयंभावः विभिन्नविषयकस्य प्रत्यक्षस्यशाब्दबोधस्य च सामग्रीसत्त्वे प्रत्यक्षेच्छादशायां विभिन्नविषयकप्रत्यक्षस्यैवोत्पत्त्या इच्छाया उत्तेजकत्वमावश्यकम् तच्च यदि सामान्यतः प्रत्यक्षेच्छात्वेन तदा घटप्रत्यक्षं जायतामितीच्छादशायां घट-

